लोकभाषा-प्रकाशनमाला—१९

# मधुरं संस्कृतम्

[ प्रथमो भागः ]

प्रकाशिका
लोकभाषा-प्रचार-समितिः
बडा ओडियामठ पुरी

मूल्यं रुपया २/—

# संस्कृत-गौरव-गानम्

१

भारतीयैकता-साधकं संस्कृतम्
भारतीयत्व-सम्पादकं संस्कृतम्
ज्ञान-पुञ्ज-प्रभा-दर्शकं संस्कृतम्
सर्वदानन्द-सन्दोहदं संस्कृतम् ।

२

सर्व-मस्तिष्क-संस्कारकं संस्कृतम्
सर्व-वाणी-परिष्कारकं संस्कृतम्
सत्पथ-प्रेरणा-दायकं संस्कृतम्
सद्गुण-ग्राम-सन्धायकं संस्कृतम् ।

३

विश्वबन्धुत्व-विस्तारकं संस्कृतम्
सर्वभूतैकता-कारकं संस्कृतम्
सर्वतः शान्ति-संस्थापकं संस्कृतम्
पञ्चशील-प्रतिष्ठापकं संस्कृतम् ।

४

त्याग-सन्तोष-सेवा-व्रतं संस्कृतम्
विश्वकल्याण-निष्ठा-युतं संस्कृतम्
ज्ञान-विज्ञान-सम्मेलनं संस्कृतम्
भुक्ति-मुक्तिद्वयोद्वेलनं संस्कृतम् ।

५

धर्मकामार्थ-मोक्ष-प्रदं संस्कृतम्
ऐहिकामुष्मिकोत्कर्ष-दं संस्कृतम्
कर्मदं ज्ञानदं भक्तिदं संस्कृतम्
सत्यनिष्ठं शिवं सुन्दरं संस्कृतम् ।

६

"सोऽहमस्मीति" निश्चायकं संस्कृतम् ।
"त्वं तदेवेति" संगायकं संस्कृतम्
"एकमेवाद्वयं" बोधकं संस्कृतम्
सर्वदा सत्यसंशोधकं संस्कृतम्

७

शब्द-लालित्य-लीलावनं संस्कृतम्
चारु-माधुर्य-धारागृहं संस्कृतम्
विश्व-चेतश्चमत्कारकं संस्कृतम् ।
पूर्वजानां यशः स्मारकं संस्कृतम् ।

—वासुदेवद्विवेदी शास्त्री

## लोकहितं मम करणीयम

मनसा सततं स्मरणीयम्, वचसा सततं वदनीयम् ।
लोकहितं मम करणीयम् ॥
न भोगभवने रमणीयम्, न च सुखशयने शयनीयम् ।
अहर्निशं जागरणीयम्, लोकहितं मम करणीयम् ॥ मनसा
न जातु दुःखं गणनीयम्, न च निजसौख्यं मननीयम् ।
कार्यक्षेत्रे त्वरणीयम्, लोकहितं मम करणीयम् ॥ मनसा

दुःखसागरे तरणीयम्, कष्टपर्वते चरणीयम्।
विपत्तिविपिने भ्रमणीयम्, लोकहितं मम करणीयम्॥ मनसा
गहनारण्ये घनान्धकारे बन्धुजना ये स्थिता गह्वरे।
तत्र मया सञ्चरणीयम्, लोकहितं मम करणीयम्॥ मनसा

डॉ श्रीधरभास्कर वर्णेकरः

## मम माता देवता

मम माता देवता। मम माता देवता॥
अति सरला, मयि मृदुला, गृहकुशला, सा अतुला॥ मम माता॥
पाययति दुग्धं, भोजयति भक्तम्, लालयति नित्यं,
तोषयति चित्तम्॥ मम माता॥
सायं काले नीराजयति, पाठयति च मां शुभं करोति,
'शुभं कुरु त्वं कल्याणम्, आरोग्यं धनसम्पदः।
दुष्टबुद्धिविनाशाय, दीपज्योतिर्नमोस्तु ते॥
पाठयति च मां शुभङ्करोति॥ मम माता॥
रात्रौ अङ्के मां स्वापयति, मधु मधु मधुरं गीतं गायति।
आ आ आ आ आ॥ मम माता॥

श्री ल. म. चक्रदेवः

## नैव क्लिष्टा न च कठिना

सुरससुबोधा विश्वमनोज्ञा
ललिता हृद्या रमणीया।

अमृतवाणी संस्कृतभाषा
नैव क्लिष्टा न च कठिना ॥
कवि कोकिलवाल्मीकि विरचिता
रामायणरमणीयकथा ।
अतीव सरला मधुरमञ्जुला
नैव क्लिष्टा न च कठिना ॥
व्यासविरचिता गणेशलिखिता
महाभारते पुण्यकथा ।
कौरवपाण्डवसंङ्गरमथिता
नैव क्लिष्टा न च कठिना ॥
कुरुक्षेत्रसमराङ्गणगीता
विश्ववन्दिता भगवद्गीता ।
अमृतमधुरा कर्मदीपिका
नैव क्लिष्टा न च कठिना ॥
कविकुलगुरुनवरसोन्मेषजा
ऋतु-रघु-कुमारकविता ।
विक्रम-शाकुन्तल-मालविका
नैव क्लिष्टा न च कठिना ॥

## जगन्नाथस्तोत्रम्

कदाचित्कालिन्दी तटविपिनसङ्गीतकवरो
मुदाभीरीनारीवदनकमलास्वादमधुपः !
रमाशम्भुब्रह्मामरपतिगणेशार्चितपदो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥१॥

भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे
दुकूलं नेत्रान्ते सहचरकटाक्षं विदधते ।
सदा श्रीमद् वृन्दावनवसतिलीलापरिचयो,
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥२॥
महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे
वसन्प्रासादान्तः सहजबलभद्रेण बलिना ।
सुभद्रामध्यस्थः सकलसुरसेवावसरदो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥३॥
कृपापारावारः सजलजलदश्रेणीरुधिरो
रमावाणी रामः स्फुरदमलपद्मेक्षणमुखः ।
सुरेन्द्रैराराध्यः श्रुतिगणशिखागीतचरितो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥४॥
रथारूढो गच्छन् पथि मिलितभूदेवपटलैः
स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ।
दयासिन्धोर्बन्धुः सकलजगतां सिन्धुसुतया
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥५॥
परंब्रह्मापीडः कुवलयदलोत्फुल्लनयनो
निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ।
रसानन्दो राधासरसवपुरालिङ्गनसुखो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥६॥
न वै प्रार्थ्यं राज्यं न च कनकमाणिक्यविभवं
न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् ।
सदा काले काले प्रमथपतिना गीतचरितो
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥७॥
हर त्वं संसारं द्रुततरमसारं सुरपतेः,
हर त्वं पापानां विततिमपरां यादवपते ।

अहो दीने नाथे निहितचरणो निश्चितमिदं
जगन्नाथस्वामी नयनपथगामी भवतु मे ॥८॥

## संकल्पमन्त्रः

पठामि संस्कृतं नित्यं वदामि संस्कृतं सदा ।
ध्यायामि संस्कृतं सम्यक् वन्दे संस्कृतमातरम् ॥
संस्कृतस्य प्रचाराय नैजं सर्वं ददाम्यहम् ।
संस्कृते च सदा भक्तिः वन्दे संस्कृतमातरम् ॥
संस्कृतस्य कृते जीवः संस्कृतस्य कृते मनः ।
आत्मानम् आहूतं मन्ये वन्दे संस्कृतमातरम् ॥

## सरस्वतीवन्दना

जय जय हे भगवति, सुरभारति, तव चरणौ प्रणमामः ।
नादब्रह्ममयि जय वागीश्वरि, शरणं ते गच्छामः ॥
त्वमसि शरण्या त्रिभुवनधन्या सुर-मुनिवन्दितचरणा ।
नवरसमधुरा कवितामुखरा स्मितरुचिरुचिराभरणा ॥
आसीना भव मानसहंसे कुन्दतुहिनशशिधवले ।
हर जडतां कुरु बोधविकासं सितपङ्कजतनुविमले ॥
ललितकलामयि, ज्ञानविभामयि, वीणापुस्तकधारिणि ।
मतिरास्तां नो तव कमले अयि कुंठाविषहारिणि ॥

# भवतु भारतम्

भारतं भारतं भवतु भारतम्, भारतं भारतं भवतु भारतम्
शक्तिसंभृतं युक्तिसंभृतं शक्तियुक्तिसंभृतं भवतु भारतम्।
शस्त्रधारकं शास्त्रधारकं शस्त्रशास्त्रधारकं भवतु भारतम्॥
रीतिसंस्कृतं नीतिसंस्कृतं रीतिनीतिसंस्कृतं भवतु भारतम्।
कर्मनैष्ठिकं धर्मनैष्ठिकं कर्मधर्मनैष्ठिकं भवतु भारतम्॥
भुक्तिसाधकं मुक्तिसाधकं भुक्तिमुक्तिसाधकं भवतु भारतम्।

# देवि ! देहि नो बलम्

देवि, देहि नो बलम्, धैर्यवीर्यसम्बलम्।
राष्ट्रमान – वर्धनाय पुण्यकर्मकौशलम्॥
देवि, देहि नो बलम्, धैर्यवीर्यसम्बलम्।
चण्डमुण्डनाशिनि, ब्रह्मशान्तिवर्षिणि
तेजसा ते यान्तु नाशं मा भूद्दुःखयामिनी।
भातु धर्मभास्करः सत्यशौर्यभास्वरः
आर्यशक्तिपृष्ठमस्तु भारतं निरर्गलम्॥
देवि, देहि नो बलम् धैर्यवीर्यसम्बलम्।
साधुवृन्दपालिके विश्वधातृकालिके।
दैत्यदर्पपापतापकालिके करालिके।
रक्ष हिन्दुसंस्कृतिं वर्धयार्यसंस्कृतम्।
वेदमन्त्रतेजसास्तु भारतं सुसंस्कृतम्॥
देवि, देहि नो बलम् धैर्यवीर्यसम्बलम्।

# नौमि पुण्यभारतम्

नौमि धर्मपालितम् पुण्यभूमि-भारतम्
जन्मभूमिमानधातृ-नेतृवृन्दसेवितम् ॥ ध्रुवम् ॥
त्यागभावभाषितं पुण्यधामराजितम्
सत्यमन्त्रमन्त्रितं सभ्यतात्मजीवितम्
दैवसम्पदन्वितं तीर्थराजराजितं
जातिधर्मसम्प्रदायभेदभाववर्जितम् ॥१॥
सर्वधर्मराजितं गंगागोदामण्डितं
सभ्यभाववर्धितं शान्तिकान्तिशोभितं
ज्ञानसूर्यदीपितं भातु पुण्यभारतं
व्यास-भास-कालिदास-जयदेववन्दितम् ॥२॥

पण्डितः भूपतिभूषणमिश्रः

# वन्दे मातरम्

संस्कृतम्, संस्कृतम्
लिख लिख लिख, वद वद वद, कुत्र यत्र अत्र तत्र श्रूयताम्
संस्कृतम्
आकुमारी-हिमाचल-घोषितम्
आर्यभाषा मातृभाषा संस्कृतम्
जलस्थल-आकाशम्, मधुरेण कम्पितम्
वन्दे मातरम्-वन्दे संस्कृतम्
संस्कृतम्
शिरोमणि-हिमालय-शोभितम्

सागरेण मातृपादक्षालितम्
स्वर्णप्रसूभारतम्, भारतीय-ऐतिह्यम्
वन्दे भारतम् वन्दे संस्कृतम्
संस्कृतम् संस्कृतम्, वन्दे
वन्दे मातरम्

पंडितः भारतविहारी दाशः

# भूमिरियं बलिदानस्य

अयि, बालकाः दर्शयामि वस्तेजो हिन्दुस्तानस्य
तेजो भारतवर्षस्य ।
अस्य मृत्तिका शिरसा वन्द्या भूमिरियं बलिदानस्य ।
वन्दे मातरं वन्दे मातरम् ॥
उत्तरभागे रक्षणकर्ता नगाधिराजो विख्यातः ।
दक्षिणदेशे पदक्षालको महासागरः प्रख्यातः ।
पश्यत गङ्गायमुनातीरं परं पावनं भूलोके
स्थाने स्थाने यद्दिव्यत्वं नैव सुराणामपि नाके
एकमेव तत् स्थानं चैतत् देवानामवतारस्य ॥ अस्य ॥
रजपूतानामेतत् स्थानं खड्गे येषाम् अभिमानः
धर्मरक्षणे युद्धे मरणं यैर्मन्यते सम्मानः ।
अत्रैवासीत् प्रतापवीरो विश्वेऽस्मिन् यो बहुमान्यः
शीलरक्षणे भस्मीभूताः अत्रासङ्ख्याः पद्मिन्यः
रजः सुपूतं वीरपदाब्जैः स्थानं चैतद् देशस्य ॥ अस्य ॥
वङ्गोऽयं यद्धरणी हरिता मनोहारिणी सर्वत्र
निजराष्ट्रार्थं सिद्धा मरणे सन्ति बालका अप्यत्र ।
रामकृष्ण - गौराङ्ग - विवेकानन्द - प्रमुखाः यत्रासन्

अरविन्दाद्याः क्रान्तिकारकाः शान्तिपूजकाः यत्रासन् ।
जन्मभूरियं 'नेताजेः' प्रख्यातस्य सुभाषस्य ॥ अस्य ॥

## प्रवहतात् संस्कृतमन्दाकिनी

शतशतकोटिशरत्पर्यन्तं
प्रवहतात् संस्कृतमन्दाकिनी ॥
सिन्धुसुतुद्रीसरस्वतीनां
तटे ऋषीणां ध्यानपराणाम् ।
होमधूमपावितलोकानाम्
अत्रिभृगूणां छन्दोवाणी ॥ प्रवहतात् ॥

वाल्मीकिमुनिव्यासविरचिता
रामकृष्णयोः पावनगाथा ।
अखण्डदीपो भगवद्गीता
कर्मयोगसन्देशदायिनी ॥ प्रवहतात् ॥

इयमस्माकं धर्मभारती
राष्ट्रैक्यस्य च महती स्फूर्तिः
विना संस्कृतं नैव संस्कृतिः
इह परत्र कल्याणकारिणी ॥ प्रवहतात् ॥

## सुन्दरसुरभाषा

मुनिवरविकसित-कविवरविलसित-
मञ्जुलमञ्जूषा, सुन्दरसुरभाषा ।

अयि मातस्तव पोषणक्षमता
मम वचनातीता, सुन्दरसुरभाषा ॥ मुनिवर
वेदव्यासवाल्मीकिमुनिनाम् ।
कालिदास-बाणादिकवीनाम् ।
पौराणिकसामान्यजनानाम्
जीवनस्य आशा, सुन्दरसुरभाषा ॥ मुनिवर
श्रुतिसुखनिनदे सकलप्रमोदे
स्मृतिहितवरदे सरसविनोदे ।
गतिमतिप्रेरककाव्यविशारदे
तव संस्कृतिरेषा, सुन्दरसुरभाषा ॥ मुनिवर
नवरसरुचिरालङ्कृतिधारा
वेदविषयवेदान्तविचारा ।
वैद्यव्योमशास्त्रादिविहारा
विजयते धरायां, सुन्दरसुरभाषा ॥ मुनिवर

श्री नारायणभट्टः

## मृदपि च चन्दनम्

मृदपि च चन्दनमस्मिन् देशे, ग्रामो ग्रामः सिद्धवनम् ।
यत्र च बाला देवीस्वरूपा, बालाः सर्वे श्रीरामाः ॥
हरिमन्दिरमिदमखिलशरीरम्
धनशक्ति जनसेवायै ।
यत्र च क्रीडायै वनराजः
धेनुर्माता परमशिवा ॥
नित्यं प्रातः शिवगुणगानं
दीपनुतिः खलु शत्रु परा ॥ मृदपि

भाग्यविधायि निजार्जितकर्म
यत्र श्रमः श्रियमर्जयति ।
त्यागधनानां तपोनिधीनां
गाथां गायति कविवाणी ।।
गङ्गाजलमिव नित्यनिर्मलं
ज्ञानं शंसति यतिवाणी ।। मृदपि
यत्र हि नैव स्वदेहविमोहः
युद्धरतानां वीराणाम् ।
यत्र हि कृषकः कार्यरतः सन्
पश्यति जीवनसाफल्यम् ।।
जीवनलक्ष्यं नहि धनपदवी
यत्र च परशिवपदसेवा ।। मृदपि

श्री जनार्दन हेग्डे

## पठत संस्कृतम्

पठत संस्कृतम्, वदत संस्कृतम्
लसतु संस्कृतं चिरं गृहे गृहे च पुनरपि ।। पठत
ज्ञानवैभवं वेदवाङ्मयं
लसति यत्र भवभयापहारि मुनिभिराजितम् ।
कीर्तिरर्जिता यस्य प्रणयनात्
व्यास-भास-कालिदास-बाण-मुख्यकविभिः ।। पठत
स्थानमूर्जितं यस्य मन्वते
वाग्विचिन्तका हि वाक्षु यस्य वीक्ष्य मधुरताम् ।
यद्विना जना नैव जानते
भारतीयसंस्कृतिं सनातनाभिधां वराम् ।। पठत

जयतु संस्कृतम्, संस्कृतिस्तथा
संस्कृतस्य संस्कृतेश्च प्रणयनाच्च मनुकुलम् ।
जयतु संस्कृतम्, जयतु मनुकुलम्
जयतु जयतु संस्कृतम्, जयतु जयतु मनुकुलम् ॥ पठत

श्री मञ्जुनाथशर्मा

# विस्मृतभेदाः सन्तः

विस्मृतभेदाः सन्तो
निर्मलभावापन्नाः
एकीभावं हृदयारूढं सततं कुर्वन्तु
भो भोः सततं कुर्वन्तु ॥ विस्मृत
पूर्वजमुनिजन-कविजनवाञ्छा सर्वेषामैक्यम्
सुखिनः सर्वे सन्त्विति गानं तेषां बहुहृद्यम् ।
भाषाधनमतजातिविभेदः हृदये मा भवतु
दुःखितदीनजनानुन्नेतुं हस्ताः प्रसरन्तु
भो भो हस्ताः प्रसरन्तु ॥ विस्मृत
गङ्गातुङ्गाकावेरीजलमस्माकं मत्वा
कृतसङ्कल्पाः कार्यं कर्तुम् आलस्यं हित्वा ।
सुवर्णपुष्पां पृथिवीमेतां क्रष्टुम् आयान्तु
प्रवहतु कामं स्वेदस्रोतः, धैर्यं मा जहतु ॥ विस्मृत
घर्षणलुण्ठनवञ्चनहननं प्रलयं संयातु
स्नेहस्रोतः प्रवहतु भ्रातुर्भावो हृदि लसतु ।
अनिलः सलिलम् अनलः सर्वं सर्वेषामेकम्
प्रवहति रक्तमभक्तं मातुः भेदो मा भवतु

भो भो भेदो मा भवतु । विस्मृत

श्री ा ज महाबलेश्वरभट्टः

# सादरं समीहताम्

सादरं समीहतां वन्दना विधीयतां
श्रद्धया स्वमातृभूः समर्चना विधीयताम् ॥
आ रदो भवन्तु वा, विद्युतो लसन्तु वा
आयुधानि भूरिशोऽपि मस्तके पतन्तु वा
धीरता न हीयतां, वीरता विधीयतां
निर्भयेन चेतसा पदं पुरो निधीयताम् ॥ सादरं
प्राणदायिनी इयं, त्राणदायिनी इयं
शक्तिभुक्तिमुक्तिदा सुधाप्रदायिनी इयं
एतदीयवन्दने सेवनेऽभिनन्दने
साभिमानमात्मनो जीवनं प्रदीयताम् ॥ सादरं

श्री वासुदेवद्विवेदी शास्त्री

# संस्कृतेन सम्भाषणं कुरु

संस्कृतेन सम्भाषणं कुरु जीवनस्य परिवर्तनं कुरु
यत्र यत्र गच्छसि पश्य तत्र संस्कृतम्
संस्कृतेः संरक्षणं कुरु ॥ संस्कृतेन ॥
जीवनस्य लक्ष्यमस्ति किम् ?
जीवनस्य लक्ष्यमेव संस्कृतस्य वर्धनम् ।
स्फूर्तिरस्ति, तत्र प्रीतिरस्ति

स्फूर्तिरस्ति, प्रीतिरस्ति संस्कृतस्य वर्धने
जिजीविषाम संस्कृताय रक्षयाम संस्कृतिं
समर्पयाम संस्कृताय जीवनम् ॥ संस्कृतेन ॥
जागृयाम वयं प्रेरयाम
जागृयाम प्रेरयाम सर्वहिन्दुसोदरान्
संपिबाम, वयं पाययाम
संपिबामः पाययामः संस्कृतामृतं सदा ।
देशहितचिन्तनं विना यस्य जीवनम्
व्यर्थमेव तस्य गर्ह्यं जीवनम् ॥ संस्कृतेन ॥
ऐक्यमस्तु अचलबुद्धिरस्तु
ऐक्यमस्तु अचलतास्तु संस्कृताभिमानिनाम् ।
धीरतास्तु, नैव भीतिरस्तु
धीरतास्त्वभीतिरस्तु मास्तु उदासीनता
मातृभूमिसेवनं दीनदलितरक्षणं
संस्कृतप्रचार एव, जीवनम् ॥ संस्कृतेन ॥

## अम्बे ! शारदे !

अम्बे ! शारदे !
मातः ! सरस्वति !
पद्मासने स्थिता देवि सुवि-शारदे
वीणा वादिनि, प्रज्ञादायिनि
पाप प्रणाशिनि, पुण्य प्रकाशिनि
कुरु भास्वर भावितं मनो मे

हे मातः ! सुविचारदे !

दुःखैस्तप्त मरुस्थल जगतीम्
मोदजलेन प्रहर्षय धरणीम्
कला–विलास–ज्ञान–गरिमाणम्
कुरू लोकम् उपहार-दे !

प्रातर्भवतु भक्तिराप्लावितम्
सायं भवनु सुशान्त्या युक्तम्
रात्रौ वर्षतु वरद - ज्योत्स्ना
जयति जगति जननि ! विस्तारदे !
रक्षतु जनति जगत्कुविचारात्
निस्सारय कलुषं संसारात्
देहि प्रबोधं मे अनुरोधम्
पूरय पुण्यं, प्रसारदे !

अम्वे शारदे !

डॉ० श्रीमती गीरिबाला

मुद्रक—कल्पना प्रेस रामकटोरा रोड वाराणी।